# अभियानानुभवः

‘कियता सुखेन वयमत्र वासं कुर्मः, तत्रत्यानां जनानां कियत् काठिन्यं वर्तते इति प्रत्यक्षं गत्वा द्रष्टव्यम् भवद्भिः सर्वैरपि’ इति जम्मू-शिबिराभियाने भागं स्वीकृतवतः कस्यचित् कार्यकर्तुः अनुभवकथने श्रुतं वाक्यम्। एषः कार्यक्रता चेन्नई-नगरे सेवानिवृत्तः कश्चन वित्तकोषोद्योगी जनः, जम्मूमध्ये तेन द्वादश दिनानि उषित्वा शिबिरद्वयं चालितम्।

‘दाक्षिणत्यानां जनानाम् उत्तरभारते प्रवासः सदैव क्लेशावहः, विशिष्य तत्रत्यभोजन-भाषासम्बन्धविषये, परन्तु एकपक्षं यावद् अहं तत्र स्थिता चेदपि तादृशः क्लेशः तु न अनुभूतः इतिमात्रं न, ततः प्रत्यागन्तुं मनः एव नासीत्’ इति अपरस्याः कस्याश्चित् कार्यकर्त्र्याः प्रतिस्पन्दवचनानि। पत्या सह आगता एषा कार्यकर्त्री, तं पतिं शिबिरे छात्ररूपेण उपावेशितवती। जम्मूमध्ये प्रवृत्तेषु सम्भाषणशिबिरेषु तमिळनाडुतः भागग्रहीता अद्वितीयः छात्रोऽहमिति सगर्वं कथयति सः महोदयः।

‘छ! जम्मू-अभियाने कुतो मया भागः न गृहीतः, मम आरक्षणमपि जातमासीत्, किन्तु कार्यान्तरेषु व्याप्ताहं गमनमेव निरस्तवती’ इति अपरस्याः कार्यकर्त्र्याः आत्मनिन्दनपूर्वकानि कटुवचनानि।
एषा कार्यकर्त्री यद्यपि जम्मू-अभियाने आगन्तुम् प्रोद्यता, विभिन्नैः वैयक्तिककारणैः आगन्तुं न शक्ता। परन्तु जम्मू प्रति गतवताम् अनुभवान् श्रुत्वा आत्मानम् असकृत् निन्दितवती।

कश्चन भूतपूर्वः कार्यकर्ता साक्रोशं माम् अनिन्दनत् ‘कुतो भवान् जम्मू-अभियानविषये मां न असूचयत्? अहमपि शिबिराणि चालयितुं शक्नोम्येव, पूर्वमेव मां यद्यसूचयिष्यत् अहं निश्चयेन शिक्षकेषु अन्यतमोऽभविष्यम्’ इति।

‘मम शिक्षणकेन्द्रस्य छात्राः मां कञ्चन साहसं जनमिव पश्यन्ति। दूरदेशं गत्वा दिग्विजयं साधयित्वा प्रत्यागतः कश्चन महावीरः इव। मम प्रवासयोजनाविषये “अस्मत्प्रदेशं प्रति भवतः विजययात्रा कदा भविष्यति” इति च कथयन्ति, मम महान् सङ्कोचः जायते’ इति पुनः जम्मू-अभियानभागग्रहीतेषु अन्यतमस्य कार्यकर्तुः विस्मयजनकानि वचनानि।

एवं बहवो जनाः ये जम्मू-अभियाने भागं गृहीतवन्तः, तेषां स्वीयान् अनुभवान् श्रावयित्वा श्रावयित्वा स्वयम् अतृप्ताः सन्तः अपरेष्वपि श्रुश्रूषाभावम् उदपादयन्। जम्मू-अभियानविषये श्रोतुं कार्यकर्तृणां महती आकाङ्क्षा च दृश्यते। यत्किमपि मेलनं, यः कोऽपि विशेषवर्गः, या कापि व्यवस्थागोष्ठी चेन्नई-नगरे प्रचलेत् नाम तत्र ‘भवान् किञ्चित् जम्मू-अभियानविषये स्वीयान् अनुभवान् श्रावयतु’ इति अद्ययावत् जनाः वदन्ति स्म, यद्यपि मासाधिकम् अतीतम् अभियानसमाप्तेः। संस्कृतभारती-इतरसंस्थाः (सङ्घसम्बद्धाः संस्थाः, पुनश्च संस्कृतक्षेत्रे विद्यमानाः अपराः संस्थाः) अपि एतद्विषयं श्रोतुं सदैव तत्पराः भवन्ति।

कश्चन सङ्घज्येष्ठकार्यकर्ता मां पृथक् आहूय ‘विजयभारतम् इति सङ्घस्य तमिळु-पत्रिकायाः कृते भवान् जम्मू-अभियानस्य अनुभवान् लिखित्वा ददातु वयं प्रकाशयामः’ इति भूयो भूयो वदति स्म। सद्यः सः पुनः अश्रावयत् - भवन्तः आसेतुहिमाचलं भारतम् एकम् इति सहजतया निरूपितवन्तः। अस्य देशस्य दक्षिणतमदिशः उत्तरतमप्रदेशं प्रयाय मासान् यावत् तत्रैव उषित्वा तत्रत्यं भोजनम् आस्वाद्य तत्रत्यैः जनैः सह आलपन्तः तत्रत्येषु स्थलेषु अटन्तश्च आसन्। एषः प्रसङ्गः वस्तुतः ऐतिहासिकः, यदि अन्यैः ज्ञातः अभविष्यत् तर्हि अस्माकं राष्ट्रैक्यभावजागरणाय अतीव हितकरं चाभविष्यत्’ इति।

एतत्सर्वं श्रुत्वा दृष्ट्वा च मम मनसि विचारः सुदृढो जातः यत् जम्मू-अभियानानुभवाः कालस्य गत्या अस्मासु एव जले लिखितमक्षरमिव विलीनाः सन्तः यावद् म्रियेरन्, ततः पूर्वमेव लिखितरूपं प्राप्नुयुः। तर्हि परोक्षभूतानां महते उपयोगाय प्रेरणायै तु भवेदेव अपि च ममापि पठ्यं पठ्यं प्रेरणादायकं स्यात् इति। अतः यद्यपि विलम्बः तथापि यथाशक्ति स्मृत्वा, पुरातनीः टिप्पणीः दृष्ट्वा, अन्यान् च पृष्ट्वा जम्मू-अभियानानुभवान् कर्गदगतान् चिकीर्षे।

मार्च मासस्य ३० दिनाङ्के जम्मूनगरं प्राप्तोऽहं, जुलाई २ दिनाङ्कपर्यन्तं तत्रासम्। एतेषु त्रिषु मासेषु सम्प्रवृत्तानि कार्याणि तु सुबहूनि। हिमाचलतः श्री.प्रतापसिंहः, श्री.सत्यदेवः, चेन्नईतः अहं च अभियानस्य आरम्भतकालतः आस्म। सप्ताहाभ्यन्तरे यावत् जम्मूकार्यक्षेत्रं प्रति आगताः अपरे त्रयः कार्यकर्तारः छत्तीसगढतः श्री.दिलीपसिंह-चन्द्रवंशी, कर्णाटकात् श्री.प्रदीपः, नीलगिरितः कर्नल् विजयकान्तः च – एतेषु द्वौ शीघ्रमेव प्रतिगतावपि। षट्स्वप्यस्मासु नैकोऽपि जम्मूतः। जम्मूराज्ये तु संस्कृतभारत्याः कार्यम् अधिकतया न आसीत् इत्यतः तत्र कार्यकर्तारः न आसन्। अतः एव अत्र कार्यारम्भं कर्तुं महता सङ्ख्यया खलु शिबिरचालनम् इति चिन्तितम्। ५०० सम्भाषणशिबिराणि चालयितुं शिक्षकाणाम् आह्वानं तु क्रियमाणम् आसीदेव, आसेतुहिमाचलं सर्वप्रदेशतः, गतैकवर्षतः। त्रिशताधिकं शिक्षकाः  आगन्तुं सिद्धाः इति सूचनापि प्राप्ता। सुदूरात् आगत्य पाठयन्ति, ते यदि तृप्ताः भवन्ति तदैव खलु एषः प्रयत्नः सफलताम् एति, अतः उत्तमानि शिबिराणि आयोजयेम, सामाजिकाः यथा अधिकतया भागं गृह्णीयुः तथा करणीयम्, तस्य उत्तरदायित्त्वम् अस्माकं षण्णामपि इति विचारः अस्माकं मनसि उदितः। परन्तु सर्वमपि अपरिचितम्।

जम्मू-सम्भागे १२ जिलासु ५०० शिबिरायोजनकार्यार्थम् षड्भिरस्माभिरेव अटनीयम् इत्यपि न साध्यम्। अपि च क्षिप्रमक्रियमाणस्य कालः पिबति तद्रसमितिवत् युगपत् समापनीयानीति अन्यानि कानिचन प्रमुखानि कार्याणि। अतः आरम्भसमयेषु बहुधा अस्पष्टता, किङ्कर्तव्यमूढता, दिशाहीनता च अनुभूता आसीत्। इच्छाशक्तेः सत्यामपि ज्ञानशक्तेरभावात् क्रियाशक्तेः अपि अनाविर्भावः। आदौ शीघ्रं समापनीयानां कार्याणाम् आवलिः कृता आसीत्। तत्र प्रामुख्यम् ऊढमासीत् आयोजनसमितेः रचनाकार्येण। जम्मूनगरे विभिन्नेषु क्षेत्रेषु ये वरिष्ठाः विशिष्टाः च जनाः आसन् तान् अस्मिन् अभियाने योजयितुं प्रयत्नः। स्वप्नतुल्यः आसीत् एषः विचारः। वस्तुतः एषः विचारस्तु अभियानस्य आरम्भकाले प्रवासं कुर्वद्भिः ज्येष्ठैः कथितः। आयोजनसमितेः रचनार्थं प्रवृत्ता आसीत् काचित् प्राथमिकी गोष्ठी। तत्र आहूताः आसन् बहवो वरिष्ठाः, बहुसंस्थाप्रतिनिधयश्च। गीताभवन इत्यस्मिन् स्थाने आयोजितायां तस्यां गोष्ठ्यां भागग्रहीतारः षष्ट्यधिकाः आसन्। एतत् अस्माकं महत् प्रोत्सहनम् अकरोत्। तस्यां गोष्ठ्यामेव बहूनां परिचयो जातः ये अग्रे बहु साहाय्यं कृतवन्तः।

गोष्ठ्याम् प्राप्ताः केचन संस्कृतच्छात्राः ये आन्तम् अस्माभिः सहैव भूत्वा कार्ये साहाय्यम् चाकुर्वन्। राष्ट्रियसंस्कृतसंस्थानस्य शिक्षकाः, प्राध्यापकः भूतपूर्वः प्राध्यापकश्च अतीव अनुकूलाः आसन् इति कारणेनापि कार्यं किञ्चित् अग्रे सृतम्। भूतपूर्वप्राध्यापकस्य धनसाहाय्यम्, वर्तमानप्राध्यापकस्य स्कूटर्दानम्, इतरेषां शिक्षकाणां बिन्दुभिः सिन्दुः इतिवत् धनसङ्ग्रहणम्, पठतां छात्राणाम् अटनादिकार्येषु साहाय्यम् – एतत्सर्वं संस्थानस्य कारणेन प्रवृत्तमासीत्।

काचित् दिशा तु प्राप्ता। परन्तु अत्रत्यानां जनानां कृते तु अस्माकं कार्यं पूर्णतया अपरिचितमेव। सम्भाषणशिबिरं नाम बालकानां शिशूनां च कृते संस्कृतस्य पाठनम् इत्येव चिन्तयन्ति, यावद्वा उक्ते सत्यपि। अतः निदर्शनरूपम् एकं वा सम्भाषणशिबिरं चालनीयमासीत्। शिबिरचालनं पुनः अस्मासु अन्यतमेन एव करणीयमित्यासीत्। २० घण्टाः दशसु दिनेषु शिबिरचालनार्थं गतं चेत् पुनः शिबिरायोजनकार्यं बाधितं भवेत् इत्यपि

सत्यस्थितिः। तथापि शिबिरमेकम् आरब्धं समीपस्थे वेदमन्दिरे वेदच्छात्राणां, तत्रत्याध्यापकानां च कृते शिबिरम् आरब्धम्। शिबिरं द्रष्टुं संयोजकाः आहूताः। शिबिरच्छात्रान् संस्कृतेन भाषमाणान् दृष्ट्वा प्रेरिताः ते सम्भाषणशिबिरविषये वास्तविकीं कल्पनां प्राप्तवन्तः।

युगपत् प्रवर्तमानम् आसीत् ज्येष्ठानां सम्पर्कः, आयोजनसमितेः रचनार्थम्। वरिष्ठानां समयानुगुणं तेषां पृष्ठतः अटनेनैव बहु समयः निरर्थकं गतः आसीत्। तावता अग्रिमकार्याणां घट्टः आरब्धव्यः एव आसीत् - मुद्रणम्। शिबिरायोजनार्थं संयोजकेभ्यः शिबिरविषये परिचयपत्रकाणि, फलकेषु स्थापयितुं भित्तिपत्राणि, सामूहिकस्थलेषु वितरितुं करपत्राणि इति मुद्रणकार्यस्य प्रथमो घट्टः। सर्वमपि मुद्रणं तु करणीयमासीत् हिन्दीभाषायाम्। अनभ्यासे विषं विद्या इति सूक्तिं निरूपयन्ती स्थितिः। हिन्द्यां लेखनस्य अनभ्यासवशात् परिचितान् पृष्ट्वा तत्कार्यसम्पादनं करणीयमासीत्। पुनश्च क्रियाकोष्ठकं, गीतपत्रं सङ्ख्यापत्रं, शिबिरप्रविष्टानाम् आवलिपत्रं, व्ययपत्रं, वाऊचर् पुस्तकानि अपि मुद्रापणीयानि। बहूनां बहुविधानां च पत्रकाणां मुद्रणं कारयितुं  बहुसमयं मुद्रणालये एव यापनीयमासीत्। युगपत् तृतीयं कार्यमपि आरब्धम् – धनसङ्ग्रहणम्। तदर्थं पुनः प्रार्थनापत्रकमुद्रणं, प्राप्तिपत्र-पुस्तकमुद्रणं च। एवं मुद्रणकार्यार्थमपि महान् कालः व्यतितः। अस्मासु केनचित् नित्यं गत्वा पक्षं यावत् मुद्रणालये एव संलग्नेन भवितव्यम् इत्यासीत्।

**धनसङ्ग्रहणसन्दर्भे काचित् अद्भुतघटना घटिता।**

संस्कृतकार्यम् ईश्वरीयं कार्यं, तत् देवभूम्यां जम्मूसम्भागे भविष्यति इति श्रुत्वा जम्मूस्थ-सुप्रसिद्धस्य रघुनाथमन्दिरस्य कश्चन अर्चकः अवदत् चतुःसहस्राधिकं किलोमीटर् दूरात् अत्र संस्कृप्रचारकार्यं कर्तुम् आगतवतां भवतां धनसङ्ग्रहणकार्यं जम्मूक्षेत्रस्य रक्षणपोषणकर्त्र्याः माता-वैष्णो-देव्याः दायित्त्वं, सा अवश्यं भवतां साहाय्यं करिष्यतीति। द्वित्रेषु एव दिनेषु अखिलभारतमहामन्त्रिणा सह वयम् आयोजनसमितेः आध्यक्ष्यं वहतु इति प्रार्थयितुं जम्मूनगरस्य भूतपूर्वं न्यायाधीशं द्रष्टुं तस्य गृहं गतवन्तः। वाचावाचि सः अस्माकं धनसङ्ग्रहणविषये परिज्ञाय ‘अहं प्रतिवर्षं माता-वैष्णो-देवी, अमरनाथमन्दिरस्य च कृते धनं ददामि, अस्मिन् वर्षे तदेव धनं संस्कृतकार्याय दास्यामीति उक्त्वा षष्टिसहस्रमितं देयपत्रं (चेक्) दत्तवान्। अरक्षितं तिष्ठति दैवरक्षितमित्यमुं भावं तदा वयम् अन्वभवाम।

शिबिरायोजनकार्यमपि युगपत् प्रचलत् आसीत्। अस्मासु द्वित्राः ग्रामं ग्रामम् अटित्वा जनान् सम्मिल्य शिबिरविषये उक्त्वा, शिबिरपरिचयात्मकं लघु लघु वर्गं प्रचाल्य शिबिराणि आयोजयन्। अग्रे अपरः नूतनक्लेशः अनुभूतः।

देहलीकार्यालयतः षष्ट्यधिकेषु बृहद्-बन्धनेषु (पार्सल्) सहस्रशः पुस्तकानि आगतानि आसन्। जम्मूरेल्स्थानकात् किमपि वस्तु आनेतव्यं चेत् क्लेशावहम्। सुरक्षाकारणेन औपचारिकाणि बहूनि - बन्धनानि उद्घाट्य प्रदर्शनीयानि, तस्य करः च देयः। अतिशीघ्रमेव नूतनतया मृदुमुद्रायाः (सील्) निर्माणं, लेटर्हेड् निर्माणं च कर्तव्यमासीत्। शिबिरायोजनेतरकार्येषु व्याप्ताः एवं समययापनम् अनन्यगतिकया करणीयम्।

एतावता पश्यत्सु एव अस्मासु सम्भाषणशिबिराणां प्रथमचक्रार्थं शिक्षकाणाम् आगमनं आरब्धम्। नानाराज्येभ्यः शिक्षकाः आगच्छन्तः सन्ति, रेल्यानेन। तदैव विचित्रा काचित् समस्या। जम्मूमध्ये इतरप्रदेशस्थ-दूरवाणी कार्यं न करोति। अतः रेल्स्थानकं प्राप्ताः शिक्षकाः सम्पर्काच्च्युताः। शिक्षकाः के, ते कतमेन मार्गेण रेलस्थानकात् बहिरागच्छन्तीति अजानन्तः वयं क्लेशमन्वभवाम। अतः अग्रे बृहत् फलकानि निर्माय रेल्स्थानकम् अनयन्। फलके विद्यमानं माता-वैष्णोदेवी चित्रं, ओङ्कारं, संस्कृताक्षराणि च दृष्ट्वा जनाः अस्मान् नमस्कारपूर्वकं पश्यन्तः क्रान्तवन्तः - अननुभूतपूर्वः अनुभवः। केचन आरक्षकाः स्वयम् अस्मत्समीपमागत्य सोत्साहं वार्तालापम् अकुर्वन्। संस्कृतस्य परिचय-अभावात् केचन फलके यत्किञ्चित् लिखितं तत्किमित्यपि अपृच्छन्।

शिक्षकाणां वासः शिबिरस्थानात् अनतिदूरे एव कल्पिनीयः। जम्मूप्रदेशे शतशः शिवमन्दिराणि दुर्गामन्दिराणि च। कानिचित् शिबिराणि तत्रैव आयोजितानि। अपराः बहु संस्थाः अपि शिबिरायोजने साहाय्यम् अकुर्वन् -

आर्यसमाजः, डोगरीब्राह्मण-प्रतिनिधिसभा, गीताभवन, वृद्धाश्रमाः, वनविकासपरिषद्, संस्कारभारती, अखिलभारतीय विद्यार्थी परिषद् इत्यादयः।

मई मासे आरब्धे प्रथमचक्रे प्रायः पञ्चाशत् शिबिराणि प्रवृत्तानि आसन्, उधमपुर, रामबन, रियासी जनपदेषु। कानिचन शिबिराणि विद्याभारत्याः विद्यालयेषु छात्रेभ्यः शिक्षकेभ्यः च प्रवृत्तानि आसन्।

सम्भाषणशिबिरविषये पत्रिकासु उत्तमाः वार्ताः अपि प्रसारिताः आसन्। 'इदम्प्रथमतया जम्मूसम्भागे संस्कृतशिबिराणि सञ्चालयितुं देशस्य कोणेभ्यः आगताः शिक्षकाः' इति सुविस्तरान् लेखान् पठित्वा बहवो जनाः अस्माकं सम्पर्कं कृत्वा स्वयं शिबिराणि आयोजयन्। कानिचन शिबिराणि तु घण्टाद्वयाभ्यन्तरे आयोजितानि आसन्। कञ्चनविद्यालयं प्रविश्य शिबिरायोजनं यदा पृष्टं दश-विंशतिनिमेषाभ्यन्तरे शिबिरमेव आयोज्य अयच्छन्। उधमपुरशिबिराणां समारोपकार्यक्रमेषु डी.सी, एस्.पी, च भागं स्व्यकुरुताम्। बहुत्र विद्यालयच्छात्रैः द्वारा शोभायात्रा अपि सवैभवं सम्पन्ना। लघु वीथीनाटकमपि कार्यकर्तारः कृतवन्तः। कर्णाटक-महाराष्ट्रतः च अत्र शिबिरं चालयितुमागताः कार्यकर्तारः।

कांश्चन शिक्षकान् चित्वा अग्रिमचक्रस्य शिबिरायोजनकार्यार्थम् ग्रामान् प्रेषितवन्तः। शिक्षकान् संयोजकरूपेण परिवर्तनरूपम् एतत् तन्त्रं विनूतनं बहु उपयोगि च आसीत्। एतेन शिबिरायोजनम् अस्मदिच्छानुगुणं जातं, कार्यभारश्च विभक्तः आसीत्। अभियानस्य कृते अत्यावश्यकेषु वस्तुषु कानिचन तत्रत्यैः जनैः द्वारा निःशुल्कं प्राप्तमासीत्। कश्चन कार्यालयाधिकारी स्वयं प्रिन्टर् क्रीत्वा प्रादात्। पुनः कश्चन स्टेशनरी वस्तूनि आपणात् प्रायोजनरूपेण प्रापयत्। कश्चित् आपणिकः सर्वेभ्यः शिक्षकेभ्यः सञ्चिकां लेखनीं च निःशुल्कम् अयच्छत्।

शिबिरारम्भसमये अप्रतीक्षितं किञ्चित् कष्टमनुभूतम् - केचन शिक्षकाः शिबिरं चालयितुं रिक्तहस्ताः आगताः। तेषां समीपे वस्तूनि, चित्राणि, स्फोरकपत्राणि वा न आसन्। शिबिरपाठ्योपकरणानि अपेक्षितानि आसन्। देहलीकार्यालयतः शतशः स्फोरकपत्राणि आनायितानि। पुनश्च तमिल्नाडुतः सहस्रशः देशभक्त-देवीदेवतानां चित्राणि प्रेषितानि। वस्तूनां सङ्ग्रहणमपि कथञ्चित् कारयित्वा शिबिराणि सम्यक्तया प्रचालितानि।

शान्तिपाठः नित्यं पठितश्चेदपि कश्चन आधिभौतिकविघ्नः जातः। येषु जनपदेषु द्वितीयचक्रे शिबिराणि चिन्तितानि तत्र भूकम्पः आसीत्। अतः शिबिराणि अपरत्र योजनीयानि आसन्। जम्मूनगरे काश्मीरपण्डितानां वसतिषु २२ शिबिराणि आयोजितानि। रामबन सुन्दरबनी इत्यादिषु केषुचित् पर्वतीयस्थलेषु अपि शिबिराणि सञ्चालितानि। केरल-कर्णाटक-महाराष्ट्रतः आगतान् शिक्षकान् दृष्ट्वा तत्रत्याः जनाः पुलकाङ्किताः अभवन्। कियद्दूराद् एते अस्मान् पाठयितुम् आगताः, एते तु भगवत्स्वरूपिणः इति अमन्वत ते।

तृतीयं चक्रं किञ्चित् पन्थाह्वानजनकम् आसीत्। यतः शिबिराणि साक्षात् सीमावर्तिक्षेत्रेषु आयोजितानि। पाकिस्तानदेशेन बलात् आक्रम्य स्ववशे स्थापितं भारतस्य स्थलं पी.ओ.के इति, ततः निकटवर्ति-स्थाने। यद्यपि तत्रत्य-हिन्दुजनसङ्ख्या अतीव न्यूना, तेषाम् उत्साहं दृष्ट्वा सधैर्यम् अस्माभिः कार्यकर्तारः प्रेषिताः। रजोरी, पून्च, कठुआ, बसोली, साम्बा इति जनपदेषु शिबिराणि आयोजितानि। पून्च-जनपदात् तु पाकिस्तान साक्षात् दृश्यते। सीमावर्तिक्षेत्रेषु शिबिराणि चालयितुम् अस्माभिः पुनः तादृशाः एव चेतव्याः आसन् ये शरीरेण मनसा च दृढाः। शृङ्गगिरि-विश्वविद्यालये पठन्तः संस्कृतच्छात्राः एतेषु पर्वतीय-सीमावर्तिक्षेत्रेषु शिबिराणि अचालयन्। तृतीयं चक्रमपि यशस्वितया समाप्तम्। आश्वस्ताः वयम्।

ततः चतुर्थे चक्रे शिबिराणि जम्मूनगरे नगरं परितश्च आसन्। अवध, लखनऊ, आन्ध्र, हरियाणातः शिक्षकाः आगताः। जम्मूनगरे एव सैनिक कोलोनी इति सैनिकानां वसतिषु शिबिरे तु कर्नल्, ब्रिगेडियर्, जेनरेल जनाः बहवः भागं स्वीकृतवन्तः। रणवीरसिंह पुरा, अरनिया, चेनेनी, अख्नूर इत्यादिषु स्थलेषु शिबिराणि सवैभवं प्राचलन्। ततः संस्कृतसङ्गमः इति कार्यक्रमस्य सज्जता अपि करणीया। समनन्तरमेव दशदिन-आवासीयः प्रशिक्षणवर्गः निश्चितः यस्य सज्जतापि युगपत् कृता।

संस्कृतसङ्गमकार्यक्रमे प्रायः ३०० जनाः आगताः। अखिलभारतीय-महामन्त्रिणः सहजसंस्कृतेन भाषणं जनानाम् प्रियतममभूत्। अध्यक्षभाषणे न्यायाधीशः श्री गोपालदत्त शर्मा महोदयः सर्वोच्चन्यायालयेन संस्कृतानुकूलं ये निर्णयाः स्वीकृताः तान् सप्रमाणम् अश्रावयत्। मुख्यातिथिः आसीत् राष्ट्रियसंस्कृतसंस्थानस्य प्राध्यापकः। लघु विज्ञानप्रदर्शिनि, पुस्तकप्रदर्शिनी च आयोजिता। केषाञ्चन छात्राणां शिक्षकाणां च अनुभवकथनमपि आसीत्।

एतदभियाने प्रायः १६० शिक्षकाः आगताः आसन्। २१ राज्येभ्यः शिक्षकरूपेण आगतेषु सन्न्यासिनौ, अधिवक्ता, प्राध्यापकाः, प्रबन्धशास्त्रनिपुणाः, अखिलभारतीयाधिकारिणः, सङ्गणकक्षेत्रे कार्यकर्तारः, विद्यालय-महाविद्यालयशिक्षकाः, शोधच्छात्राः, महाविद्यालयच्छात्राः, विद्यालयच्छात्राः, वित्तकोषाधिकारिणः, संस्कृतापणचालकौ, गृहिण्यः, सेवानिवृत्ताः इत्यादयः सर्वविधाः अपि जनाः आसन्। केचन शिक्षकास्तु सकुटुम्बमेव आगताः। शिक्षकाः शिबिराणि समाप्य स्वीयान् अनुभवान् उक्त्वा प्रतिगताः। प्रायः सर्वेषामपि शिक्षकानां मतमासीत् यत् एतादृशम् अभियानकार्यं पुनरपि चालनीयम्, अत्रत्याः जनाः संस्कृतभाषाज्ञानं प्राप्तुम् अतीव उत्सुकाः परन्तु तेन वञ्चिताः, सर्वकारस्यापि अस्मिन् प्रदेशे तावान् प्रोत्साहः नास्ति यद्यपि जनाः संस्कृताध्ययनम् इच्छन्ति, अतः संस्कृतभारत्याः अयं प्रयत्नः श्लाघनीयः, अनुवर्तनीयश्च इति।

प्रादेशिकाः कार्यकर्तारः लभ्येरन् इति अभियानस्य समापनघट्टे आवासीयवर्गः निश्चितः आसीत्। तत्र २६ प्रशिक्षणार्थिनः, एतेषु चत्वारः युवानः हरियाणातः। बाबा भोतो इति आश्रमे प्रवृत्तः आसीत् अयं वर्गः। आश्रमं परितः वसन्तः ग्रामीणजनाः बहु साहाय्यम् अकुर्वन्। उपान्तिमे दिने शोभायात्रा आसीत्, ततः सर्वेषामपि भोजनं ग्रामस्थगृहेषु आसीत्। आवासीयवर्गस्य समारोपे अ.भा. सङ्घटमन्त्रिणः भाषणात् परं केचन युवानः विस्तारकाः भवितुम् इच्छन्ति स्म। अभियानं समाप्तम्, सर्वे स्वगृहं गताः। दिलीपसिंह चन्द्रवंशी जम्मूसम्भागस्य प्रान्तसङ्घटमन्त्री-दायित्त्वं स्वीकृत्य अनुवर्तनकार्यं सश्रद्धं पश्यन्नस्ति।

अहमपि मत्कार्यक्षेत्रं प्रतिनिवृत्तः। जम्मूतवीतः चेन्नई गच्छति अन्दमान् एक्स्प्रैस् रेल्याने उपविशतः मम नेत्रयोः तान्येव चित्राणि, चित्ते – गीताभवन, वीरभवन, रघुनाथमन्दिर, काशी-अवध-पुणे-ग्वालिय-मुम्बई-आन्ध्र-कर्णाटक-केरलतः शिक्षकाणां मुखानि, शिबिरेषु डोग्रीभाषा-वचनानि, संस्थानपरिसरः, शिवमन्दिराणि, दुर्गामन्दिराणि..... तान्येव स्मरणानि, मुखमुद्घाट्य किमपि वक्तुम् अनिच्छन् कश्चन अपूर्वः वियोगमय-दुःखानुभवः। यास्यत्यद्य शकुन्तलेति..... महाकवेः वचनानि साश्रुनयनं स्मृतानि.....अहो..... हृदयविधायकं मौनम्.... वाचामगोचरत्वम्.....।

## अभियानसन्दर्भेषु काश्चन विचित्राः घटनाः (स्मारं स्मारं सुखिनः स्याम)

### १. अहो आकर्षणं पाठ्योपकरणानाम्

सम्भाषणशिबिरं प्रचलत् अस्ति कस्मिंश्चित् ग्रामे। महिलाः भूरिशः भागग्रहीतारः। शिबिरस्य प्रथमे दिने वस्तूनि, चित्राणि इत्यादीनि सर्वाण्यपि पाठ्योपकरणानि प्रदर्शयन्ती सोत्साहं पाठयन्ती आसीत् शिक्षिका। शिबिरं समाप्य गन्तुं प्रोद्यता शिक्षिका पुरतः दृष्ट्वा चकिता। तत्र स्थिता आसीत् शिबिरे भागं गृहीतवती काचित् महिला। सा स्वस्याः वस्त्रस्य अञ्चलं विस्तार्य भिक्षायाचनम् इव अकरोत्। स्वयं किमपि दातुम् असमर्था शिक्षिका यदा चिन्तामग्ना जाता तदा एव सा अपृच्छत् – भवती अद्य यदा शिबिरं चालितवती तदा बहूनि सुन्दराणि चित्राणि दर्शितवती। तेषु कृपया गायत्रीदेव्याः चित्रं मह्यं ददातु इति। विस्मिता शिक्षिका दशदिनेभ्यः परं तस्यै तदयच्छत् एव।

### २. कोषात् वित्तम् अयच्छत् वित्तकोषाधिकारी

जम्मू प्रति सम्भाषणशिबिराणि चालयितुं केचन सकुटुम्बम् आगताः। तेषु द्वे मातापुत्र्यौ चेन्नईतः आगतवत्यौ आस्ताम्। कठुआ जिलायां कस्मिंश्चित् सङ्गणककेन्द्रे अनयोः शिबिरं निश्चितम्। द्वेऽपि शिबिरस्थानं द्रष्टुं पूर्वस्मिन् दिने लोकयानेन प्रस्थिते। स्थानके प्राप्ते सति लोकयानात् अवतरन्त्याः मातुः हर्षोल्लासः। पुरतः विराजते कैनरा-वित्तकोषः। 'अहमपि कैनरा-वित्तकोषे ३० वर्षाणि यावत् कार्यं कृत्वा सेवानिवृत्ता इदानीं संस्कृतप्रचारकार्ये साहाय्यं कर्तुम् सुदूरात् जम्मू प्रति आगता' इति स्वपरिचयं बैंक मैनेजर समीपे कृतवती। 'इतः समीपे एव शिबिरं भविष्यति, भवता अवश्यम् आगन्तव्यम्' इत्युक्त्वा गन्तुं यदा प्रस्थिता तदैव सः वित्तकोषाधिकारी स्वस्य कोषात् १,०००/- रूप्यकाणि - इदं संस्कृतकार्याय मदीयं लघु समर्पणम् इत्युक्त्वा प्रादात्। तद्दृष्ट्वा अन्येऽपि द्वित्राः स्वकोषात् धनमयच्छन्।

### ३. दृष्टो मार्गे दृप्तसिंहः

सम्भाषणशिबिराणि चालयित्वा ततः दशदिवसीयः आवासीयवर्गः करणीयः येन स्थानीयकार्यकर्तृगणः निर्मितो भविष्यति इति निश्चित्य तदर्थं समुचितं स्थलम् अन्विष्यन्तः चत्वारः कार्यकर्तारो वयं प्रस्थिताः। अघोर् इति किञ्चन आश्रमं प्रति द्वाभ्यां द्विचक्रिकाभ्यां गताः वयम्। कोटबल्वाल् इत्यस्मात् स्थानात् २० कि.मी. दूरे ग्रामे राजते अयमाश्रमः। आश्रमं दृष्ट्वा प्रतिनिवर्तन्तः वयं कतिचन क्षणानि मार्गे एव स्तब्धाः निश्चेष्टाः अतिष्ठाम। अस्मान् पश्यन् स्थितः कश्चन सिंहः तत्र अस्माभिः दृष्टः। किंकर्तव्यमूढाः वयं तत्रैव, तथैव स्थिताः। ततः स्वयमेव निर्गच्छन्तं तं सिंहं दृष्ट्वैव पुनः श्वासोच्छ्वासं कर्तुमारब्धाः। इमां घटनां श्रुत्वा 'अस्मिन् सम्भागे नैकोऽपि सिंहो विद्यते, निश्चयेन भवतां भ्रमः स्यात्, अथवा माता-वैष्णो-देव्याः वाहनस्य अनुग्रहरुपोऽयं प्रसङ्गः' इति तत्रत्यानां प्रतिस्पन्दवचनानि श्रुत्वा वयं तु मूकाः सञ्जाताः।

### ४. सर्पाः सर्पन्ति अस्मदुपरि

बाबा भोतो इत्यस्मिन् आश्रमे दशदिवसीय-आवासीयवर्गः प्रचलति स्म। आश्रमं परितः ग्रामाः, सर्वत्र सस्यक्षेत्राणि हरितानि सस्यान्येव च। रात्रौ केचन आश्रममन्दिरस्य प्राङ्गणे एव शयिताः। मध्यरात्रौ कश्चन चीत्कारः श्रुतः। कश्चन प्रशिक्षार्थी युवा अस्मान् प्रबोध्य अत्र सर्पाः सन्तीति अवदत्। अनन्तरं वयं दृष्टवन्तः समीपे सर्पः गच्छन्नासीत्। अर्धबोधावस्थायां यत्किञ्चित् ममोपरि गच्छत् आसीत् इति केचन तदैव स्मारं स्मारं भयेन कम्पमानाः

आसन्। तद्दिनादारभ्य बहवः भूतले विद्यमानं विशालं प्रकोष्ठं परित्यज्य उपरि निर्मिते अपर्याप्ते लघु प्रकोष्ठे एव निद्राम् अकुर्वन्। बाबा भोतो अत्र सर्परूपेण निवसति, सः भक्तान् अनुगृह्णातीति तत्रत्यानां वचनानि श्रुत्वापि नैकोऽपि तस्मिन् प्राङ्गणे शेतुम् पुनरुत्सहते स्म।

### ५. ध्याने धनसङ्ग्रहणम्?

आवासीयवर्गस्य समाप्तेः पूर्वस्मिन् दिवसे ग्रामेषु शोभायात्रा आसीत्। कस्मिंश्चित् ग्रामे विद्यमाने शिवमन्दिरे सर्वेऽपि शिक्षकाः सम्मिल्य भजनानि अगायन्। तत्र यदा वयं ध्यानलीनाः सन्तः आस्म, तदा ग्रामस्थाः महिलाः आगत्य अस्माकं स्यूतेषु धनं स्थापयित्वा अगच्छन्। वारं वारं निवारिते सत्यपि संस्कृतकार्यार्थम् इदम् अतः निश्चयेन भवद्भिः स्वीकरणीयमेव इत्यवोचन्।

### ६. शिक्षकोऽपि पठति वदतु संस्कृतम्

जम्मूमध्ये संस्कृतकार्यं कर्तुम् आगतवत्सु अर्धांशाः शिक्षकाः दाक्षिणात्याः। तेषां हिन्दीभाषाज्ञानम् अत्यल्पमेव। तेषां वासव्यवस्था जनानां गृहेषु भवति। ते जनाः तु हिन्दीं विहाय अन्याः भाषाः न जानन्ति। अतः शिक्षकाः बहुधा क्लेशमनुभवन्ति स्म। काचित् शिक्षिका नूतनं प्रयासमेव आरब्धवती। सा नित्यं रात्रौ वदतु संस्कृतम् इत्यस्य पुस्तकस्य अध्ययनं करोति स्म। अस्मिन् पुस्तके तु शिबिरे पाठ्यमानानि वाक्यानि एव भवन्ति, किमर्थं तत् पठतीति पृष्टायां सत्यां सा अवोचत् - संस्कृतद्वारा हिन्दीं ज्ञातुमेव अहम् एतत् पुस्तकं पठामि, तद्द्वारा अत्रत्यैः सह सम्भाषणं कर्तुं शक्नुयाम् इति।

### ७. किमिति अभिनयेन?

संस्कृतसम्भाषणशिबिरे भाषान्तरस्य प्रयोगः न भवत्येव। अपरिचिताः शब्दास्तु अभिनयमाध्यमेन पाठ्यन्ते। परन्तु तत्रापि क्लेशः अनूभूतः दाक्षिणात्यैः। भवतः नाम किम् इति प्रथमः पाठ्यबिन्दुः। किम् इत्यस्य शब्दस्य कथनसमये दक्षिणहस्तस्य चतस्रः अङ्गुलीः बद्ध्वा अङ्गुष्ठम् उपरिकृत्य साभिनयं पाठ्यते। परन्तु उत्तरभारते किंशब्दस्य अभिनयः तथा न भवति। तत्र तु हस्तं पुरतः कृत्वा अङ्गुलीत्रयं सङ्कुचितं कृत्वा वामतः दक्षिणं प्रति चालनरूपः प्रश्नवाचकोऽभिनयः। एतदजानन्तः दाक्षिणत्याः शिक्षकाः प्रथमदिने यदा किम् इत्युक्त्वा अभिनयम् अकुर्वन्, अयं शिक्षकः यत्किमपि पातुम् य़इच्छेत् किम् इति अचिन्तयन्।

तथैव माता पाकं करोति इत्यस्मिन् वाक्यं पाकशब्दकथनसमये हस्तेन दर्वी-आलोडन-अभिनयः क्रियते दक्षिणे। परन्तु उत्तरभारते तु अन्यथा भवति। रोटिकानिर्माणसमये हस्तयोः ताडनं यथा क्रियते तथैव अभिनेतव्यम्। एतदपि अजानन्तः शिक्षकाः यदा अपाठयन् ते छात्राणां हास्यपात्रतां गताः (न तु परिहासस्य)।

### ८. गुट्का खादन्ती शिक्षिका?

बसोली इति ग्रामे काचित् शिक्षिका शिबिरं चालयन्ती आसीत्। तृतीये दिने तत्र वृष्टिरारब्धा। तेन शिक्षिकायाः स्वास्थ्यं किञ्चित् बाधितमभवत्। तथापि सा उत्साहेन शिबिरं चालयन्ती आसीत्। पञ्चमे दिने कण्ठात् शब्दः सरलतया न निर्गच्छत्येव। कण्ठावरोधे जाते सति शिबिरमध्ये एव सा किञ्चित् आयुर्वेदौषधचूर्णं मुखे स्थापयन्ती आसीत्। तदनन्तरं छात्राणां व्यवहारे किञ्चित् वैचित्र्यम् लक्षितं तया। नैकोऽपि छात्रः तामुद्दिश्य यथापूर्वं श्रद्धया व्यवहरति स्म। अनन्तरमेव तया अवगतमासीत् यत् सा गुठ्का इति मादकं किञ्चित् पदार्थं शिबिरमध्ये एव

सेवमाना अस्ति इति छात्रैः चिन्तितमासीत्, येन तस्याः उपरि विद्यमाना श्रद्धा ह्रासतां गता। कारणम् अवगत्य सा अग्रिमे दिने एव तत् चूर्णं तान् अदर्शयत्, नष्टां श्रद्धां पुनः प्राप्नोत् च।

## ९. उत्तमं नाम

सम्भाषणशिबिरस्य प्रथमः पाठ्यबिन्दुः - मम नाम, भवतः नाम, भवत्याः नाम इति। जम्मूमध्ये जनानां भाषावगमनस्तरः किञ्चित् न्यूनः, अतः तेषां भूरि प्रोत्सहनं कर्तव्यम् इति विनिश्चित्य कश्चन कार्यकर्ता स्वशिबिरे प्रोत्साहनवाचकानि पदानि मध्ये मध्ये पुनः पुनः वदति स्म। छात्राः यत्किमपि वदन्तु, उत्तमम् उत्तमम् इति स कथयति स्म। यदा यदा सः उत्तमम् इति वदति तदा पृष्ठतः विद्यमानः कश्चन मध्यवयस्कः स्वहस्तम् उत्तोलयतीति तेन लक्षितम्। अनन्तरं यदा तमेव जनमुद्दिश्य भवतः नाम किम् इति पृष्टं, तदैवावगतं खलु कथं प्रमादः जातः इति। तेन स्वनाम कथितमासीत् - मम नाम उत्तम सिंह इति।

## १०. देवभाषा पिशाचानामपि?

चेनेनी इति कस्मिंश्चित् लघु ग्रामे एकं शिबिरम् आयोजितम् आसीत्। शिबिरं चालयितुं गता हिमाचलतः काचित् विस्तारिका। दिनद्वयात् परं रात्रौ दूरात् धूमं दृष्ट्वा किञ्चिदिव भीता जाता। अग्रिमे दिने सा अवगतवती यत्र तया उषितः ततः अनतिदूरे एव किञ्चन श्मशानमस्तीति। आरम्भे यद्यपि किञ्चित् भीता सा आन्तं तत्रैव उपश्मशानं दश दिनानि एकाकिनी उषित्वा शिबिरं पर्यसमापयत्। पिशाचान् अपि अहं सधैर्यं संस्कृतं पिपठिषामि इति तस्याः धैर्यपूर्वकाणि वचनानि अस्मासु रोमाञ्चम् अजनयन्।

## ११. गीतार्थमवगतोऽस्मि

सुन्दरबनी इति पर्वतीयजिलायां शिबिराणि आयोज्य कर्णाटकतः आगतान् यूनः तत्र प्रैषयाम। अनुभवकथने कस्यचित् कार्यकर्तुः वचनानि अवधानयोग्यानि आसन् - अत्र आगत्य एव मया कष्टपर्वते चरणीयं विपत्तिविपिने भ्रमणीयम् इति शिबिरगीते विद्यमानानां एतासां पङ्क्तीनाम् अर्थः अवबुद्धः इति।

अपरः शिक्षकः स्वानुभवान् विस्तारयन् - अस्मिन् पर्वतीये ग्रामे मया शिबिरं चालनीयं वा? अतीव कष्टावहमिदं कार्यम् इति प्रथमे दिने अहमनुभूतवान्। द्वितीये दिने मम वासस्थानेऽपि महत् कष्टम् - शौचालयः दूरे एकत्र, स्नातुं पुनः अन्यत्र अटित्वा गन्तव्यम्, भोजनं कर्तुम् पुनरन्यदेव स्थानम्। शिबिरं चालयितुं तु ७ किलोमीटर् दूरे पादाभ्यां चालनीयम्। अलं संस्कृतकार्येण मम जीवने, इतःपरं नाहं संस्कृतकार्यं कर्तुमुत्सहे इत्यचिन्तयं, परन्तु अत्रत्यजनानां व्यवहारं दृष्ट्वा, तेषां कष्टस्थितिम् अवगत्य, तेषाम् उत्साहं श्रद्धां च अवलोक्य प्रभावितोऽभवम् , अग्रिमम् अभियानं कदा कुत्र इति चापृच्छत्।

## १२. लवणसहितं सेवस्य सेवनम्?

उत्तरकर्णाटकतः शिबिरं चालयितुम् आगता काचित् गृहिणी सुन्दरबनीजिलायां कञ्चिद् ग्रामं प्रति प्रेषिता। तस्याः वासः कस्मिंश्चित् दुर्गामन्दिरे। शिबिरं चालयित्वा प्रतिनिवर्तमाना सा कस्मिंश्चित् गृहे वृक्षस्थानि कानिचन अपूर्वाणि फलानि दृष्टवती। गुच्छशः हरितवर्णानि लघु लघु आकर्षकानि फलानि पुनः पुनः अवलोकयन्ती सा मार्गे एव स्थिता। यद्यपि प्रथमवारम् एतानि फलानि पश्यामि तथापि सुपरिचितानि एतानि फलानि इत्येव तस्याः अभासत। बलात् स्मृतिं चोदयन्ती सा युरेका युरेका इति उत्तरं प्राप्नोत्। एतानि तु सेवफलानि। नित्यम् आपणे दृश्यन्ते एतानि फलानि, न कदापि जीवने एतेषां वृक्षः दृष्टः इति तस्याः उद्रेकः। तद्गृहात् निर्गच्छन्तं बालम् आहूय सा कानिचन

फलानि यदा पृष्टवती सः बालः गृहस्य अन्तः गत्वा स्वपितामहम् आकारयत्। सङ्कोचम् अनुभवन्ती शिक्षिका ततः गन्तुं यदा प्रोद्यता तदैव सा वृद्धा हिन्द्यां यत्किञ्चित् उक्त्वा गृहं प्रविश्य उत्पीठिकाम् आनीय तस्य उपरि आरुह्य दश-द्वादश फलानि त्रोटयित्वा दत्तवती। उल्लसिता एषा फलानि हस्तयोः सङ्गृह्य स्ववासस्थानं प्राप्नोत्। फलानि अतीव लघूनि, अपक्वानि इति विज्ञाय अपि सा लवणेन सह कानिचन सेवफलानि गीर्णवती।

### १३. नष्टाः स्यूताः पुनर्लब्धाः

उपद्विशतं जनाः, प्रत्येकं जनस्यापि सप्ताष्टवारं वा गमनागमनं कार्यम्, उपपञ्चाशत् दिनेषु यातायातकार्यम् - एतत्सर्वं यत्र प्रवर्तेत तत्र निश्चयेन यत्किमपि वस्तु येन केनचित् यदाकदापि विस्मर्यते एव। अस्मिन् अभियानेऽपि नैकवारं तथाभवत्। परन्तु आश्चर्यं नाम प्रतिवारं नष्टानि वस्तूनि पुनर्लब्धान्येव। कदाचित् लोकयानेषु स्यूताः विस्मृताः, कदाचित् स्थानके एव त्यक्ताः कदाचित् रेल्स्थानके स्थापिताः कदाचित् बस्-यानस्य उपरि परित्यक्ताः। द्विवारं तु स्यूतः नष्टः इति बोधोऽपि नासीत्। अग्रिमे दिने स्नानार्थं यदा वस्त्राणि स्वीकरणीयानि तदैव स्यूतः विस्मृतः इति अवगतम्। निराशया लोकयानस्थानं गत्वा अन्विष्टे सति त्रिंशत्-चत्वारिंशद्-निमेषाभ्यन्तरे स्यूताः यथावत् पुनर्लब्धाः।

### १४. कश्चन यवनः शिबिरे

अहं श्रीनगरं गमिष्यामि अतः श्वः नागमिष्यामीति वदन् कश्चन शिबिरच्छात्रः शिक्षिकायै समाजनिधिं पूर्वस्मिन्नेव दिने प्रादात्। श्रीनगरं वा? तत्र तु अधिकतया यवनाः एव वसन्ति खलु, हिन्दुजनानां तत्र जीवनम् अतीव कष्टकरं किल? इति शिक्षिकया पृष्टे सति स पुनरुवाच - महोदये, अहमपि यवनः एव इति। परम्परागौरवात् केचन यवनाः अपि स्वस्य पितामह-प्रपितामहस्य एव उपनाम स्वनाम्ना सह योजयन्तीति कृत्वा नामश्रवणेन हिन्दु इत्येव भासते।

### १५. संस्कृतज्ञः तु ज्योतिषिज्ञोऽपि

जम्मू प्राप्य अहं दूरवाणीं कर्तुं एस्.टी.डी आपणं गतवान्। दूरवाण्या मया क्रियमाणं संवादं श्रुत्वा मम वेषभूषणं च वीक्ष्य आपणिकः तर्कितवान् अहं संस्कृतेन सम्भाषमाणः स्याम् इति। धनस्वीकरणं निराकुर्वन् सः मह्यं स्वहस्तं दर्शयन् - पण्डित महोदय कृपया हस्तं दृष्ट्वा मम भविष्यं वदतु इत्यवोचत्। अहं तु भविष्यति जम्मूसम्भागे विद्यमानानां सम्भाषणशिबिराणां विवरणं सूचयित्वा ततः शीघ्रं प्रतिनिवृत्तः।

### १६. पञ्चर्-भूतेन यानेन शिबिरम् आयोजितम्

अभियानदृष्ट्या मार्गे सर्वत्र अटनमेव मम प्रमुखं कार्यम् आसीत्। कश्चन महाविद्यालय-प्रधानाचार्यः अभियानस्य कृते स्वस्य स्कूटर् यानं प्रादात्। मार्गे गच्छन् आसम्। स्कूटर्-यानस्य पञ्चर् अभवत्। भाग्यवशात् समीपे एवासीत् तत्समीकर्तुम् आपणः। यानं सम्यक् कुर्वन् आपणिकः यदा मम हिन्दी भाषाम् (अपभ्रष्टम्) अशृणोत्, कुतः आयातोऽसीति अपृच्छत्। स्वपरिचयं ददत् यदाहम् अभियानस्य विषये अवदं, विस्मितः सः धनं निराकुर्वन्, एकं सम्भाषणशिबिरमपि आयोजयत्। पुनः सः बहुवारं मामेव पृष्ट्वा यानस्य सरविस् अपि अकरोत्। सरविस् निमित्तं सः धनं न स्व्यकरोत् इति पुनः वक्तव्यं किम्?

### १७. वयं ते न

शिबिरायोजनार्थं नित्यम् अस्माभिः बहुदूरम् अटनीयम् आसीत्। कदाचित् महति आतपे (४७ डिग्री) जिलाशः स्कूटर्-याने अटनीयमासीत्। परन्तु नवोत्साहेन पूरितम् अस्मदन्तरङ्गम् एतत्क्लेशं नैव गणयामास। पण्डोरा इति कञ्चित् ग्रामं प्रविष्टौ आवाम्। तत्र शिबिरायोजनं सर्वं समाप्य प्रत्यागमनसमये ग्रामस्य सरपञ्च आवाम् आहूय तर्जनपूर्वकं भागो यहाँ से (इतः धावत) इत्यवोचत्। चकितौ आवां किमिति तस्यैव मुखं यदा पश्यन्तौ आस्व तदा तस्य दृष्टिः स्कूटर्-याने पतिता। सः झटिति क्षमापूर्वकम् अवदत् – पूर्वम् अत्र कुमतं प्रचारयद्भिः धूर्तैः आगत्य एवमेव कार्यं कृतमासीत्, वयं तान् सन्ताड्य प्रेषितवन्तः। भवतः याने जय माता दी इति लिखितं दृष्ट्वा भवन्तः ते न इति अवागच्छम्, एवं ननु? इति। आवां पुनः तस्मिन् विश्वासं दृढीकर्तुं शिबिरे उपयुज्यमानानि देवीदेवताचित्राणि अदर्शयाव। आश्वस्तः सः शिबिरे द्वित्रान् छात्रान् प्रैषयत्।

### १८. चेन्नई-बालिकायाः चित्रं जम्मूपत्रिकासु?

अरे! भवती कथम् अत्र लोकयाने अटन्ती दृश्यते इति काचित् अपरिचिता महिला शिबिरचालिकां काञ्चित् बालिकाम् अपृच्छत्। आश्चर्येण पश्यन्तीं तां बालिकां तदैव बहवः यात्रिकाः दीर्घपरिचिता इव अभिज्ञाय तां प्रशंसितवन्तः। अनन्तरं तया ज्ञातम् आसीत् यत् पूर्वस्मिन्नेव दिने अनेकासु वार्तापत्रिकासु तस्याः विषये चित्रसहितं वार्तागतम् आसीत्। तां पत्रिकां सा कष्टेन कुतश्चित् सम्पाद्य स्वगृहं प्रति नीत्वा मित्राणि सगर्वं दर्शितवती।

### १९. राजहंसोऽहं जातः तदा

निर्वासितानां काश्मीरपण्डितानां वसतिस्थानम्। तत्र सेवाभारतीकार्यकर्त्र्याः किञ्चन गृहम्। शिबिरे अतिथिरूपेण उपस्थितोऽहं तत्र आहूतः भोजनार्थम्। अन्नं, व्यञ्जनं, तेमनं, सूपः सर्वं परिवेषितम्। परन्तु स्थाल्याम् आसीत् अदृष्टपूर्वं किञ्चित् पक्वं वस्तु। शाकमिवासीत् द्रष्टुम्। परिवेषणस्थालीतः तेन वस्तुना मम स्थालिका प्राप्ता। ततः मन्मुखम्। विचित्रं स्वादु। किमित्यहमपृच्छम्। कमलनालम् इति यदा सावदत् विस्मयान्वितोऽहम्।

### २०. पुस्तकं विना संस्कृतम्?

जम्मूमध्ये संस्कृतभारत्याः कार्यस्य परिचयोऽपि नासीत्। सम्भाषणशिबिरं नाम किम् इत्यपि जनाः न जानन्ति स्म। कस्यचित् संयोजकस्य गृहं यदा वयमगच्छाम सः अस्मान् झटित्यपृच्छत् – पुस्तकं विना भवन्तः कथं संस्कृतेन भाषितुं शक्नुवन्तीति? अप्रतीक्षितस्य एतस्य उत्तरं किं वा स्यात् ऋते संस्कृतसम्भाषणप्रदर्शनात्?

### २१. निर्धनिकाः दातारः

आवासीयवर्गः प्रचलन् आसीत्। गोमाऊँस् इत्यत्र बाबा भोतो इति आश्रमे। प्रथमे दिने अस्माभिः स्वयमेव पाकं कृत्वा खादनीयमासीत्। समयः श्रमः च अधिकः एव गतः तदर्थम्। अनन्तरमेव कश्चन पाचकः लब्धः। ग्रामजनाः अनन्तरं किञ्चिदिव अस्मत्कार्यविषये यदा ज्ञातवन्तः तद्दिनादारभ्य नित्यं सायङ्कालभोजनार्थं २०० रोटिकाः स्व स्व गृहेषु निर्माय यच्छन्ति स्म। काचिन्माता गोणीमितानि तण्डुलान्यादाय भवन्तः संस्कृतेन सम्भाषणं कुर्वन्तीति विज्ञाय अहं यत्किमपि दातुमिच्छन्ती अत्रागता इति वदन्ती तदयच्छत्। कश्चन शाकविक्रेता एकवारं शाकानि दत्त्वा अद्य अहम् एतानि शाकानि निःशुल्कं दातुमिच्छामि इत्युक्त्वा दत्तवान्।

आवासीये वर्गे वयम् उपचत्वारिंशत् जनाः। भोजननिर्माणार्थं नियुक्तः पाचकः अस्माभिः सहैव वसन् आसीत्। वर्गमध्ये नित्यं समीपस्थग्रामेभ्यः ज्येष्ठाः वरिष्ठाः च आगत्य सायं भोजनं प्रदाय भजनादिषु कार्यक्रमेषु उपस्थाय सर्वैः

सह सम्भाष्य कदाचित् धनमपि दत्त्वा प्रतिगच्छन्ति स्म। अन्तिमे दिने पाचकाय वेतनं दत्तम्। तत् स्वीकृत्य सः ततः एव कञ्चन भागं पृथक्कृत्य एतत् धनं संस्कृतकार्यार्थं मम योगदानम् इत्युक्त्वा अदात्।

## २२. संयुक्ते कुटुम्बे न तथा उच्चारणम्

काश्मीरपण्डितानाम् उच्चारणविषये कश्चन विचित्रः अंशः लक्षितः। संयुक्ताक्षरोच्चारणे तेषां क्लेशः। अतः ते बहुधा संयुक्तं पदे पूर्वतनस्य वर्णस्य स्वरम् अपरस्मिन्नपि योजयित्वा एव वदन्ति। यथा परिवर्तनं स्थाने परिवरतनम्, स्पष्टं स्थाने सपष्टम् इत्यादि। मम पुत्रः सुकूल् गतवान् इति वदन्ति, अहम् अस्नानं करोमि इति च। क्ष स्थाने ख उच्चारयन्ति। भगवद्गीतायाः आरम्भम् एवमेव – धर्मखेत्रे कुरुखेत्रे ....। गृहसङ्केतुं प्रष्टुं कदाचित् दूरवाण्या मया श्रुतम् - वन् सिकिस्टि सिकिस् (१६६) इति।

## २३. निर्धनिकाः दातारः

जम्मूप्रान्ते बहुषु स्थानेषु आङ्ग्लभाषायाः प्रयोगः एव न श्रूयते स्म। डोग्री, हिन्दी, काश्मीरी, पहाडी, तावदेव। विद्यालयेषु अपि तथैव। एतेन मया अपरः कश्चन प्रभावी अंशः लक्षितः। संस्कृते भाषमाणाः वयं कांश्चन अपरिचितान् शब्दान् वक्तुं भाषान्तरस्य साहाय्यं यदा स्वीकुर्मः तदा दक्षिणभारते तु आङ्ग्लभाषायाः एव प्रयोगः भवति भूरिशः। परन्तु अत्र तु हिन्द्याः प्रयोगो भवति। तेन महान् लाभांशः विद्यते यतः प्रायः बहूनि हिन्दी-पदानि संस्कृतादेव निष्पन्नानि। अतः हिन्दी-आश्रणेनापि एकरीत्या संस्कृताश्रयः एव। एतेन अस्माकं संस्कृतशब्दज्ञानस्य वर्धनं भवति, भाषास्तरस्य च विकासो भवति। एतत्तु मम वैयक्तिकः प्रत्यक्षः अनुभवः।।

## २४. किमहं यामि?

जम्मूसम्भागे संस्कृताभियानं समाप्तम्। सर्वे शिक्षकाः कार्यकर्तारश्च बहुपूर्वमेव गताः। अहं तु आसमाप्ति मासत्रयं यावत् तत्रैवासम्। ममापि प्रतिगमनस्य दिनम् उपयातम्। भारयुतं हृदयमवलम्ब्य रेल्-स्थानकं प्रति यातोऽहम्। रेल्-स्थानकस्य पुरतः एव लघु लघु बस्-यानानि गच्छन्ति। एतैः यानैः एव त्रिभ्यः मासेभ्यः विभिन्नप्रदेशेभ्यः आगच्छतः शिक्षकान् आनयामि स्म। इदानीं स्वयम् अहमेव ममान्तिमं प्रणामं यच्छन् इतः प्रस्थितः। तदा कस्यचिद् यानस्य चालकः माम् एकाकिनम् अवलोक्य - भाईसाहब् आप के साथ और सभी लोग कहाँ? इति यदा अपृच्छत्, तदा किं वदानि? पादौ अग्रे सरतः परन्तु अन्तरङ्गं तु हठात् तत्रैव स्थितवत्।